(२) संस्कृतभाषा अस्माकं भाषाणाम् अर्थे गङ्गानदी इव। अहम् एतत् स्वीकरोमि यत् यदि संस्कृतभाषा शुष्का भवेत् तर्हि सर्वाः अपि भाषाः गतप्राणाः भवेयुः। सर्वे संस्कृतं पठन्तु। संस्कृतेन मम जीवनधारा परिवर्तिता।

*-महात्मा गाँधी।*

(३) संस्कृतं भारतस्य राष्ट्रभाषा भवेत्।

*-सर् सी०वी० रमन।*

(४) न जाने विद्यते किं तद् माधुर्यमत्र संस्कृते।
सर्वदैव समुन्मत्ता येन वैदेशिका वयम्॥

*-विल्सन।*

पठने पाठने वार्तालापे प्रश्ने तथोत्तरे।
वदन्तु संस्कृतं सर्वे गुरुशिष्याः अहर्निशम्॥

*-पं० वासुदेव द्विवेदी शास्त्री।*

इस श्लोक को याद करें तथा गुरुओं से अर्थ पूछें-

**व्याघ्रीव तिष्ठति जरा परितर्जयन्ती**
**रोगाश्च शत्रव इव प्रहरन्ति देहम्।**
**आयुः परिस्रवति भिन्नघटादिवाम्भो**
**लोकस्तथाप्यहितमाचरतीति चित्रम् !॥**

***

# विंशपाठः

***कर्मधारयसमासः-***

कर्मधारय समास विशेषण पूर्वपद, विशेष्य पूर्वपद, विशेषण उभयपद, उपमान पूर्वपद, उपमान उत्तरपद, सम्भावना पूर्वपद, अवधारणा पूर्वपद के भेद से सात प्रकार का होता है। प्रत्येक का उदाहरण इस प्रकार है-

***(१) विशेषणपूर्वपदकर्मधारयः-***

कृष्णश्चासौ सर्पश्च=कृष्णसर्पः।

***(२) विशेष्यपूर्वपदकर्मधारयः-***

गोपालश्चासौ बालश्च=गोपालबालः।

***(३) विशेषण-उभयपदकर्मधारयः-***

शीतं च तत् उष्णं च=शीतोष्णम्।

***(४) उपमानपूर्वपदकर्मधारयः-***

मेघ इव श्यामः=मेघश्यामः।

***(५) उपमान-उत्तरपदकर्मधारयः-***

नरः सिंह इव=नरसिंहः।

***(६) सम्भावनापूर्वपदकर्मधारयः-***

गुण इति बुद्धिः=गुणबुद्धिः।

***(७) अवधारणापूर्वपदकर्मधारयः-***

विद्यैव धनम्=विद्याधनम्।

***उपसर्गप्रयोगः-***

व्याप्नोति=फैलता है=Expands.

समाप्नोति=समाप्त करता है=Ends.

चिनोति=चुनता है=Collects/elects/sellects.

उपचिनोति=बढ़ाता है-Increase.

अपचिनोति=घटाता है=Makes less.

सञ्चिनोति=इकट्ठा करता है=Collects.

अनुगृह्णाति=कृपा करता है=Please/Blessing.

प्रतिगृह्णाति=दान लेता है=Takes donation.

संगृह्णाति=संग्रह करता है=Collects.

आप्नोति=प्राप्त करता है=Receives.

गृह्णाति=लेता है=Takes.

संगृह्णाति=समेटता है=Collects.

***बहुब्रीहिसमासः-***

बहुब्रीहि समास भी द्विपद, बहुपद, सह पूर्वपद, संख्योत्तरपद, संख्योभयपद, व्यतिहारलक्षण और दिगन्तराललक्षण के भेद से सात प्रकार का होता है। इनका क्रमशः उदाहरण इस प्रकार है-

(१) द्विपदबहुब्रीहिः-चित्रा गावो यस्य सः=चित्रगुः (गोपः)

(२) बहुपदबहुब्रीहिः-अधिकः उन्नतः अंसः यस्य सः=अधिकोन्नतांसः।

(३) सह पूर्वपदबहुब्रीहिः-सह कृष्णेन वर्तत इति=सकृष्णः।

(४) संख्योत्तरपदबहुब्रीहिः-दशानां समीपे ये सन्ति ते=उपदशाः।

(५) संख्योभयपदबहुब्रीहिः-द्वौ वा त्रयो वा=द्वित्राः।

(६) व्यतिहारलक्षणबहुब्रीहिः-केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तम् इति= केशाकेशि युद्धम्।

(७) दिगन्तराललक्षणबहुब्रीहिः-दक्षिणस्याः पूर्वस्याश्च दिशः अन्तरालम् दक्षिणपूर्वा।

***अव्ययशब्दानामर्थाः-***

स्वर्=स्वर्ग= Heaven.

प्रातर्=प्रातःकाल=Morning.

सनुतर्=अन्तर्धान=Disappearing

नीचैस्=नीचा=Below.

चिरम्=कुछ=Late/Little.

किञ्चित्=कुछ=Some/Little.

ऋधक्=सचमुच=Really.

युगपत्=एकाएक=Suddenly.

पृथक्=भिन्न=Separate/different

श्वस्=आगामी कल=Tomorrow.

अन्तर्=बीच में=Middle.

पुनर्=फिर=Again.

जोषम्=चुप होना=To keep quite
बहिस्=बाहर= Out.
अधस्=नीचे=Below.
निकषा=समीप=Near.
वृथा=व्यर्थ=Useless.
न=नहीं=No.
सायम्=सायंकाल=Evening
ईषत्=कुछ=Some/Little.
अवस्=बाहर=Out.
स्वयं=अपने आप=Self.
उच्चैस्=ऊँचा=High.
शनैस्=धीरे=Slowly.
ऋते=विना=Without.
आरात्=दूर या समीप=Far or near
ह्यस्=बीता हुआ कल=Yesterday
दिवा=दिन=Day.
मनाक्=कुछ=Some.
तुष्णीम्=चुप होना=Keeps quite.
समया=समीप=Near.
नक्तम्=रात्रि=Night.

***महापुरुषाणां वचनानि-***

आबालवृद्धं प्रत्येकं जनं संस्कृते वदन्तं द्रष्टुमिच्छामि।

***-पं० मदनमोहन मालवीयः।***

संस्कृतभाषा भारतस्य महानिधिः। समाजं सुसभ्यं सुसंस्कृतं मानवीय- गुणसम्पन्नं च कर्तुं बाल्यकालात् एव संस्कृतशिक्षायां विशेषध्यानं दातव्यम्-

***-पं० जवाहरलाल नेहरुः।***

संस्कृतभाषा अस्माकं कृते सम्मानं बलप्रदानञ्च करोति।

***-स्वामी विवेकानन्दः।***

भारतीयसंस्कृतेः ज्ञानं संस्कृताध्ययनं विना न भवितुमर्हति।

***-डॉ० हेडगेवारः।***

श्लोकः कण्ठस्थीकर्तव्यः-

**विद्यया वपुषा वाचा वस्त्रेण विभवेन च।**
**वकारैः पञ्चभिः युक्तो नरो भवति पूजितः।।**

***

# एकविंशपाठः

***द्विगुसमासः-***

एकवद्भावी तथा अनेकवद्भावी के भेद से द्विगुसमास दो प्रकार का होता है।

(१) एकवद्भावी द्विगुसमासः- (क) त्रयाणां शृङ्गाणां समाहारः-त्रिशृङ्गम्।
(ख) पञ्चानां फलानां समाहारः-पञ्चफली।

(२) अनेकवद्भावी द्विगु-सप्त च ते ऋषयश्च=सप्तर्षयः।

***द्वन्द्वसमासः-***

(१) इतरेतरद्वन्द्वः-रामश्च कृष्णश्च=रामकृष्णौ।

(२) समाहारद्वन्द्वः-हरिश्च हरश्च गुरुश्च एषां समाहारः-हरिहरगुरवः।

***अव्ययीभावसमासः-***

तटं तटं प्रति=अनुतटम्।

गिरिं गिरिं प्रति=अनुगिरि।

क्रमम् अनतिक्रम्य वर्तते इति=यथाक्रमम्।

***इन्हें ध्यान से समझें-***

नञ्=नहीं= No.

हेतौ=निमित्त= Reason.

सामि=आधा= Half.

वत्=समान= Equal / Like.

ब्राह्मणवत्=ब्राह्मण के समान= Equal to Brahmin.

क्षत्रियवत्=क्षत्रिय के समान= Equal to Kshatriya.

सना, सनत् सनात्=नित्य रहने वाला= Immortal.

उपधा=भेद= Difference.

तिरस्=टेढ़ा या तिरस्कार= Bent/Contempt.

अन्तरा=मध्य या विना= Middle or without.

अन्तरेण=विना= Without.

**समास एवं कारक के रहस्यों को समझने के लिए निम्न श्लोकों को अवश्य कण्ठस्थ करें-**

षोढा समासः संक्षेपात् अष्टाविंशतिधा पुनः ।
नित्यानित्यत्वयोगेन लुगलुक्त्वेन च द्विधा ॥१॥

तत्राष्टधा तत्पुरुषः सप्तधा कर्मधारयः ।
सप्तधा च बहुब्रीहिर्द्विगुराभाषितो द्विधा ॥२॥

द्वन्द्वोऽपि द्विविधो ज्ञेयोऽव्ययीभावो द्विधा मतः ।
तेषां पुनः समासानां प्राधान्यं स्याच्चतुर्विधम् ॥३॥

चकारबहुलो द्वन्द्वः स चासौ कर्मधारयः ।
यस्य येषां बहुब्रीहिः शेषस्तत्पुरुषः स्मृतः ॥४॥

कर्तृकर्मक्रियायुक्तः प्रयोगः स्यात् सकर्मकः ।
अकर्मकः कर्मशून्यः कर्मद्वन्द्वो द्विकर्मकः ॥५॥

**वृक्षशाखा** तत्पुरुषः **श्वेताश्वः** कर्मधारयः ।
**रक्तवस्त्रो** बहुब्रीहिर्द्वन्द्व**श्चन्द्रदिवाकरौ** ॥६॥

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु **यन्नव्येति** तदव्ययम् ॥७॥

आदौ **कर्तृपदं** वाच्यं द्वितीयादिपदं ततः ।
**क्त्वा तुमुन् ल्यप् च मध्ये स्यात् कुर्यात् अन्ते क्रियापदम्**॥८॥

कर्ता कर्म च करणं सम्प्रदानं तथैव च ।
अपादानाधिकरणम् इत्याहुः कारकाणि षट् ॥९॥

निर्देशे प्रथमा प्रोक्ता सैव चामन्त्रणेष्वपि ।
द्वितीया कर्मणि प्रोक्ता तृतीयानुक्त-कर्तरि ॥१०॥

करणे हेतावपि ज्ञान-ज्ञाप्येङ्गविकृतौ तथा ।
तादर्थ्ये सम्प्रदाने च चतुर्थी स्याच्च सर्वदा ॥११॥

हेत्वपादानयोश्चैव पञ्चमी कथिता बुधैः ।
सम्बन्धे च सदा षष्ठी आधारे सप्तमी भवेत् ॥१२॥

प्रथमा कर्तरि यदा द्वितीया कर्मणि तदा ।
तृतीया कर्तरि यदा कर्मणि प्रथमा तदा ॥१३॥

***महापुरुषाणां वचनानि-***

(१) एकात्मता-संरक्षणं भारतस्य महती समस्या, एतस्याः समाधानं तदैव भविष्यति यदा संस्कृतं समस्तप्रदेशानां सम्पर्क-भाषा भवेत्। एतदर्थं सरलसंस्कृतम् आवश्यकम्। ***-श्रीमती इन्दिरा गान्धी।***

(२) संस्कृतभाषा प्रत्येकजनं यथार्थमानवं कर्तुं शक्नोति।

***-सुभाषचन्द्र वसुः।***

(३) संस्कृतभाषा विश्वस्य (अन्ताराष्ट्रिय) भाषा भवितुम् अर्हति।

***-सर् मिर्जा इस्माइल्।***

***

# द्वाविंशपाठः

*अव्ययशब्दानामर्थाः -*

च=और=And.
ह=प्रसिद्ध=Famous.
एव=निश्चय=Assure/sure.
शाश्वत्=सदा=Forever.
पूपत्=प्रश्न/प्रशंसा=Question.
कुवित्=बहुत्=Many/more/lot.
चेत्=यदि=If.
अत्र=यहाँ=Here.
नह=निषेध पूर्वकारम्भ=Negative.
नकिः=वर्जन=Leave/Negative.
माङ्=निषेध=Prohibition.
यावत्=जितना=As much.
त्वै=विवर्त=
द्वै=दान=Gift.
तथापि=तो भी=Even then
किल=प्रसिद्धि=Fame.
अथ=आरम्भ=Starting.
आदह=प्रारम्भ/निन्दा=Starting.
वा=विकल्प=Option.
अह=स्पष्ट=Clear.
एवं=निश्चय=Surity.
युगपत्=सहसा=Suddenly.
सूपत्=प्रश्न/प्रशंसा=Praise.
नेत्=शङ्का=Doubt.
चेत्=यदि=If.
कच्चित्=प्रश्न=Question.
हन्त=हर्ष/विषाद=Happiness and unhappiness
माकिम्=वर्जन=Negative.
नाकिम्=वर्जन=Negative.
नञ्=निषेध=Negative.
तावत्=उतना=That much.
न्वौ=ितार्गः=Counter argueme‌nt.
रै=हविदान=Giving sacrifice.
खलु=निश्चय/निषेध=Sure.
अथो=प्रारम्भ=Start at.
स्म=भूतकाल=Past tense.

***१० लकारों का अर्थ-***

(१) लट्-वर्तमानकाल=पठति।

(२) लिट्=परोक्ष अनद्यतन भूतकाल=पपाठ।

(३) लुट्=अनद्यतन भविष्यत्=पठिता।

(४) लृट्=सामान्य भविष्यत्काल=पठिष्यति।

(५) लेट्=शर्त लगाना और आशंका। (इसका प्रयोग मात्र वेदों में है)

(६) लोट्=आज्ञा प्रार्थना=पठतु।

(७) लङ् =अनद्यतन भूतकाल=अपठत्।

(८) लिङ् =विधि, प्रार्थना आशीर्वाद आदि=पठेत्।

(९) आशीर्लिङ् =भगवान् तव सहायकः भूयात्।

(१०) लुङ् =सामान्य भूतकाल=अपठीत्, अपाठीत्।

(११) लृङ् =हेतु, हेतुमद्भाव आदि लिङ् के अर्थ में जब क्रिया की असिद्धि हो=अपठिष्यत्।

***पुनः स्मरणार्थम् (सन्धि संक्षेपः)-***

**(१) यण्सन्धिः -**

प्रति+एकः=प्रत्येकः — यदि+अपि=यद्यपि

इति+आदिः=इत्यादिः — मधु+अरिः=मध्वरिः

धातृ+अंशः=धात्रंशः — लृ+आकृतिः=लाकृतिः

**(२) अयादिसन्धिः -**

हरे+ए=हरये — ने+अनम्=नयंनम्

गुरो+ए=गुरवे — शे+अयनम्=शयनम्।

भो+अति=भवति — गै+अति=गायति।

भौ+अकः=भावकः — द्वौ+एतौ=द्वावेतौ।

**(३) गुणसन्धिः -**

महा+ईशः=महेशः — न+इति=नेति

सप्त+ऋषिः=सप्तर्षिः — हित+उपदेशः=हितोपदेशः

ब्रह्म+ऋषिः=ब्रह्मर्षिः — तव+लृकारः=तवल्कारः

**(४) वृद्धिसन्धिः -**

अत्र+एषः=अत्रैषः — न+एतत्=नैतत्।

जल+ओघः=जलौघः — कृष्ण+औत्कण्ठ्यम्=कृष्णौत्कण्ठ्यम्।

**(५) दीर्घसन्धिः -**

दैत्य+अरिः=दैत्यारिः — श्री+ईशः=श्रीशः

होतृ+ऋृकारः=होतृकारः — विद्या+आलयः=विद्यालयः

भानु+उदय:=भानूदय:।

**(६) पूर्वरूपसन्धि: -**

हरे+अव=हरेऽव
विष्णो+अव=विष्णोऽव

**(७) श्चुत्वसन्धि: -**

रामस्+शेते=रामश्शेते
रामस्+चिनोति=रामश्चिनोति
सत्+चित्=सच्चित्
शार्ङ्गिन्+जय=शार्ङ्गिञ्जय

**(८) ष्टुत्वसन्धि: -**

इष्+त:=इष्ट:
रामस्+षष्ठ:=रामष्षष्ठ:
उद्+डीन:=उड्डीन:
चक्रिन्+ढौकसे=चक्रिण्ढौकसे

**(९) जश्त्वसन्धि: -(क)**

जगत्+ईश:=जगदीश:
सुप्+अन्त:=सुबन्त:
सत्+आचार:=सदाचार:
अच्+अन्त:=अजन्त:

**(१०) जश्त्वसन्धि: -(ख)**

बुध्+धि:=बुद्धि:
लभ्+ध:=लब्ध:
दुघ्+धम्=दुग्धम्
क्षुभ्+ध:=क्षुब्ध:

**(११) चर्त्वसन्धि: -**

सद्+कार:=सत्कार:
सद्+पुत्र:=सत्पुत्र:
उद्+साह:=उत्साह:
तद्+पर:=तत्पर:

**(१२) अनुस्वारसन्धि: -**

सत्यम्+वद=सत्यं वद
गृहम्+गच्छ=गृहं गच्छ
अध्ययनम्+कुरु=अध्ययनं कुरु
ईश्वरम्+नमामि=ईश्वरं नमामि

**(१३) विसर्गसन्धि: -**

छात्र:+तिष्ठति=छात्रस्तिष्ठति
हरि:+च=हरिश्च
बाल:+तरति=बालस्तरति
राम:+शेते=रामश्शेते

**(१४) रूत्वसन्धि: -**

मुनि:+अवदत्=मुनिरवदत्
गुरु:+अस्ति=गुरुरस्ति
हरे:+एव=हरेरेव
गुरो:+धनम्=गुरोर्धनम्

**(१५) उत्वसन्धि: -(क)**

क:+अपि=कोऽपि
बालक:+अस्ति=बालकोऽस्ति

कृष्णः+अवदत्=कृष्णोऽवदत् कः+अयम्=कोऽयम्

**(१६) उत्वसन्धिः-(ख)**

रामः+गच्छति=रामो गच्छति देवः+जयति=देवो जयति

**(१७) यत्वसन्धिः-**

देवाः+गच्छन्ति=देवा गच्छन्ति रामः+इच्छति=राम इच्छति

**(१८) सुलोपसन्धिः-**

सः+गच्छति=स गच्छति सः+लिखति=स लिखति

***उच्चैः वाचनं कुर्वन्तु***

* लसतु संस्कृतं चिरं गृहं गृहे गृहे च पुनरपि।

* संस्कृतेन सम्भाषणं कुरु, जीवनस्य परिवर्तनं कुरु।

* संस्कृतमेव राष्ट्रभाषा, संस्कृतमेव विश्वभाषा।

* कल-कल, छल-छल, प्रवहतु दिशि-दिशि पावनसंस्कृतधारा।

* टाटा-बाय्-बाय् नहि 'नमो नमः' हैलो नहि 'हरिओम्'।

* संस्कृतं कस्यापि एकदेशस्य, एकस्याः जातेः धर्मस्य वा भाषा नास्ति, अपितु संस्कृतं सर्वेषाम् अस्ति।

अतः संस्कृतस्य अध्ययनं नाम न केवलम् एकस्याः भाषायाः अध्ययनम् अपितु प्राचीनतमभारतीयज्ञान-विज्ञानेन सह सम्पर्कस्थापनम्, तद्प्रति सम्मान-प्रदर्शनञ्चास्ति।

* अत एव इयं भाषा सर्वेषां सनातनपरंपरानुयायिनाम् अनिवार्यभाषा अस्ति।

* यः आर्यावर्ते जन्म लब्ध्वापि संस्कृतं न जानाति धिक् तं पशुसमं जनम्।

***

# त्रयोविंशः पाठः

***पुनः स्मरणार्थं कारकोदाहरणानि-***

***प्रथमा (कर्ता)***-रामः पठति। छात्रः गृहं गच्छति। गुरुः पाठयति। शिष्यः पठति।

***द्वितीया (कर्म)***-सः पुस्तकं पठति। सः प्रश्नं पृच्छति। अहं संस्कृतं पठामि। सः ग्रामं प्रति गच्छति। विद्यालयं परितः पुष्पाणि सन्ति। धिक् दुर्जनम्।

***तृतीया (करण)***- पादाभ्यां गच्छति। लेखन्या लिखति। मुखेन वदति। नेत्राभ्यां पश्यति। दुर्जनेन पुत्रेण किं प्रयोजनम्। अलं विवादेन।

***चतुर्थी (सम्प्रदान)***- (नमः, स्वस्ति, रुच्) निर्धनाय धनं ददाति। छात्राय पुस्तकं देहि। गुरवे नमः। जनकाय नमः। पुत्राय स्वस्ति। बालकाय मिष्टान्नं रोचते।

***पञ्चमी (अपादान)***-(भय, अध्ययन) सः गृहात् आगच्छति। वृक्षात् पत्रं पतति। हिमालयात् गङ्गा प्रवहति। सिंहात् मृगः बिभेति। छात्रः उपाध्यायात् अधीते।

***षष्ठी (सम्बन्धः)***-रामस्य पुत्रः। मम पिता। अयं तस्य शिष्यः।

***सप्तमी (अधिकरण)***-गृहे निवसति। विद्यालये पठति। नगरे मनुष्याः सन्ति।

***श्लोक भी स्मरण करें-***

कर्ता कर्म च करणं सम्प्रदानं तथैव च।
अपादानाधिकरणम् इत्याहुः कारकाणि षट्।।

* षष्ठी का क्रिया के साथ अन्वय न होने से इसे कारक नहीं माना जाता। इसलिए कारक छ हुए।

***कारकलक्षणम्-***

कियान्वयित्वं कारकत्वम्।

***वाच्यपरिवर्तनाभ्यासः-***

| **कर्तृवाच्यम्** | **कर्मवाच्यम्** |
|---|---|
| अहं पठामि | मया पठ्यते। |

| | |
|---|---|
| त्वं पठसि | त्वया पठ्यते। |
| सः पठति | तेन पठ्यते। |
| सा पठति | तया पठ्यते। |
| सः बालकः पठति | तेन बालकेन पठ्यते। |
| इयं बालिका पठति | अनया बालिकया पठ्यते। |
| आवां पठावः | आवाभ्यां पठ्यते। |
| वयं पठामः | अस्माभिः पठ्यते। |
| इमौ बालकौ पठतः | आभ्यां बालकाभ्यां पठ्यते। |
| इमे बालिके पठतः | आभ्यां बालिकाभ्यां पठ्यते। |
| भवन्तौ पठतः | भवद्भ्यां पठ्यते। |
| भवत्यौ पठतः | भवतीभ्यां पठ्यते |
| अहं श्लोकं पठामि | मया श्लोकः पठ्यते। |
| अहं पुस्तकं पठामि | मया पुस्तकं पठ्यते। |
| अहं ग्रन्थं पठामि | मया ग्रन्थः पठ्यते। |
| अहं श्लोकान् पठामि | मया श्लोकाः पठ्यन्ते। |
| अहं पुस्तके पठामि | मया पुस्तके पठ्येते। |
| अहं पुस्तकानि पठामि | मया पुस्तकानि पठ्यन्ते। |
| अहं गीतं शृणोमि | मया गीतं श्रूयते। |
| अहं गीते शृणोमि | मया गीते श्रूयेते। |
| अहं गीतानि शृणोमि | मया गीतानि श्रूयन्ते। |

***कर्तृवाच्यम्-***

कर्तरि प्रत्यये जाते प्रथमा कर्तृकारके।
द्वितीयान्तं च कर्म स्यात् कर्त्रधीनं क्रियापदम्।।

***कर्मवाच्यम्-***

कर्मणि प्रत्यये जाते तृतीया कर्तृकारके।
प्रथमान्तं च कर्म स्यात् कर्माधीनं क्रियापदम्।।

***सूचना-***

इसी प्रकार भूतकाल भविष्यत् कालों में भी अभ्यास करना चाहिए।

***

# चतुर्विंशः पाठः

***सूचना-***

*  करोति इति पदस्य सहयोगेन बहूनि क्रियापदानि निर्मातुं शक्यन्ते।

***यथा-***

भोजनं करोति। गायनं करोति। पाठनं करोति।
पठनं करोति। हसनं करोति। गमनं करोति।
दर्शनं करोति। आगमनं करोति। लेखनं करोति।
श्रवणं करोति। भाषणं करोति। पानं करोति।
जागरणं करोति। शयनं करोति।

एवमेव करोषि, करोमि इत्यादि क्रियापदानाम् अपि प्रयोगाः कर्तुं शक्यन्ते।

***कृधातोः लट्लकारस्य रूपाणि स्मरन्तु-***

| | | | |
|---|---|---|---|
| प्र.पु. | करोति | कुरुतः | कुर्वन्ति |
| म.पु. | करोषि | कुरुथः | कुरुथ |
| उ.पु. | करोमि | कुर्वः | कुर्मः |

***प्रयोगः-***

सः पठनं करोति। तौ पठनं कुरुतः। ते पठनं कुर्वन्ति।
त्वं पठनं करोषि। युवां पठनं कुरुथः। यूयं पठनं कुरुथ।
अहं पठनं करोमि। आवां पठनं कुर्वः। वयं पठनं कुर्मः।

***लृट्लकारः भविष्यत् कालः-***

| | | |
|---|---|---|
| करिष्यति | करिष्यतः | करिष्यन्ति |
| करिष्यसि | करिष्यथः | करिष्यथ |
| करिष्यामि | करिष्यावः | करिष्यामः |

(इसका पूर्ववत् अभ्यास करें)

***सूचना-*** भूतकालस्य कृते सम्यक् स्मरन्तु-

| | | |
|---|---|---|
| (पुं०) कृतवान् | कृतवन्तौ | कृतवन्तः |
| (स्त्री०) कृतवती | कृतवत्यौ | कृतवत्यः |

*प्रयोगः -*

राम: पठनं कृतवान्
रामौ पठनं कृतवन्तौ
रामा: पठनं कृतवन्त:

* त्वं, युवां, यूयं, एवं अहं, आवां, वयं के साथ भी इसी प्रकार प्रयोग करें।

(स्त्री.) सीता पठनं कृतवती
सीते पठनं कृतवत्यौ
सीता: पठनं कृतवत्य:

* त्वम्, अहं आदि के रूप तीनों लिङ्गों में समान होते हैं।

***तुमुन् प्रत्ययः -***

***सूचना***-अस्य प्रत्ययस्य निमित्तार्थे (के लिए अर्थ में) प्रयोग: भवति।

| **सामान्यरूपम्** | **प्रेरणार्थकरूपम्** |
|---|---|
| पठितुम्=पढने=To Study | पाठयितुम् |
| कर्तुम्=करने= To do | कारयितुम् |
| गन्तुम्=जाने=To go | गमयितुम् |
| लिखितुम्=लिखने=To write | लेखयितुम् |
| भवितुम्=होने=To be | भावयितुम् |
| वदितुम्=बोलने=To speak | वादयितुम् |
| स्थातुम्=रहने=To Live | स्थापयितुम् |
| पातुम्=पीने=To drink | पाययितुम् |
| द्रष्टुम्=देखने=To see/look | दर्शयितुम् |
| नेतुम्=ले जाने=To take | नाययितुम् |
| प्रष्टुम्=पूछने=To ask | प्रच्छयितुम् |
| कथयितुम्=कहने=To tell | कथयितुम् |
| ज्ञातुम्=जानने=To know | ज्ञापयितुम् |
| दातुम्=देने=To give | दापयितुम् |
| ग्रहीतुम्=लेने=To take | ग्राहयितुम् |

* **शक्, इष्, गम्, ज्ञा धातु के लट् लकार के रूप स्मरण करें।**

| | | | |
|---|---|---|---|
| **शक्-** | शक्नोति | शक्नुतः | शक्नुवन्ति |
| | शक्नोषि | शक्नुथः | शक्नुथ |
| | शक्नोमि | शक्नुवः | शक्नुमः |

**इष्-** इच्छति इच्छतः इच्छन्ति, इच्छसि इच्छथः इच्छथ इच्छामि इच्छावः इच्छामः।

**गम्-** गच्छति गच्छतः गच्छन्ति, गच्छसि गच्छथः गच्छथ, गच्छामि गच्छावः गच्छामः।

**ज्ञा-** जानाति जानीतः जानन्ति। जानासि जानीथः जानीथ। जानामि जानीवः जानीमः।

***वाक्यप्रयोगः-***

(१) सः कार्यं कर्तुं शक्नोति। सः गृहं गन्तुं शक्नोति। त्वं जलं पातुं शक्नोषि। अहं गृहं गन्तुं शक्नोमि। वयं संस्कृतं वक्तुं शक्नुमः।

(२) सः पठितुम् इच्छति। ते गन्तुम् इच्छन्ति। त्वं द्रष्टुम् इच्छसि? अहं कार्यं कर्तुम् इच्छामि। वयं संस्कृतेन वक्तुम् इच्छामः।

(३) सः पठितुं गच्छति। त्वं जलं पातुं गच्छसि। अहं द्रष्टुं गच्छामि।

(४) सः पठितुं जानाति। त्वं दातुं जानासि। अहं कर्तुं जानामि।

***संकल्पः-***

| (प्र०) | (उ०) |
|---|---|
| किं तव नाम? | संस्कृत-भक्तः। |
| कः तव ग्रामः? | संस्कृत-ग्रामः। |
| का तव भाषा? | संस्कृत-भाषा। |
| किं तव लक्ष्यम्? | संस्कृत-सेवा। |
| कः तव बन्धुः? | संस्कृत-प्रेमी। |
| किं तव मित्रम्? | संस्कृत-सेवी। |
| कः तव शत्रुः? | संस्कृत-द्रोही। |
| कः तव पूज्यः? | संस्कृतनिष्ठः। |

***

# पञ्चविंशः पाठः

***अव्ययशब्दानामर्थाः -***

ज्योक्=शीघ्र=Soon/fast.
शम्=कल्याण=Welfare.
सहसा=अकस्मात्=Suddenly.
विना=विना=Without.
नाना=अनेक=Many.
स्वस्ति=आशीर्वाद=Blessings.
स्वधा=पितृ के लिए दान=Donation for ancestors.
अलम्=बस, समर्थ=Stop/enough/able.
अन्यत्=और=Other.
उपांशुः=एकान्त=Solitude.
क्षमा=क्षमा=Excuse.
वषट्=देवताओं को हवि देना=Sacrificial to god.
श्रौषट्=देवताओं को हवि देना=Sacrificial to god.
बौषट्=देवताओं को हवि देना=Sacrificial to god.
विहायसा=आकाश=Sky/space.
दोषा=रात=Night.
मृषा=झूठ=Lie.
मिथ्या=झूठ=Lie.
मुधा=व्यर्थ=Useless.
पुरा=पहले=Earlier/before.
मिथोः=साथ=Together/with.
मिथस्=परस्पर=One another/each other.
पायस्=अक्सर=Often.
मुहुस्=बारम्बार=again and again.
प्रवाहुकम्=एकदम=Instantly.
प्रवाहिका=एकदम=Instantly.
आर्यहलम्=बलात्=With force.
अभीक्ष्णम्=निरन्तर=Forever/Continuous.
साकम्=साथ=With.
नमस्=प्रणाम=Salutation.
धिरुक्=धिक्कार=Hegitate fie.
अथ=प्रारम्भ/अनन्तर=Begining/After.
ओम्=स्वीकृति=Acceptance.
आम्=हाँ=Yes.
प्रताम्=ग्लानि=Compunction.
प्रशाम्=समान=Equal.

कामम्=यथेच्छ=Enough
भूयः=पुनः=Again
परम्=परन्तु=But
मङ्क्षु=शीघ्र=Quickly
झटिति=शीघ्र=Quickly
अवश्यम्=अवश्य=Certainly
सुष्ठु=अच्छा=Good
वरम्=अच्छा=Good
सुदि=शुक्लपक्ष=Lunar month
आहोस्वित्=विकल्प=Option
दिष्ट्या=भाग्यसे=By fate
हुम्=भर्त्सना=Admonition
अद्यत्वे=आजकल=Now a days
असकृत्=बार-बार=Again & again
अह्नाय/सत्वरम्=शीघ्र=Soon
उताहो=विकल्प=Option
प्रसह्य=बलात्=Forcefully
इति=समाप्ति=End
स्थाने=उचित=Right
परुत्=परसाल=Last year
ऐषमः=इस वर्ष=This year

प्रकामम्=यथेच्छ=Sufficient
सांप्रतम्=इस समय=This time
साक्षात्=सामने=In front
आशु=शीघ्र=Quickly
झटिति=शीघ्र=Quickly
ओम्=हाँ=Yes
अञ्जसा=अच्छा/जल्दी=Good/soon
वदि=कृष्णपद=Dark half of a lunar month
संवत्=वर्ष=Year
व=समानता=Equality
चटु/चाटु=चापलुसी=Flattery
इव=समानता=Equality
सकृत्=एकबार=One time
प्रेत्य/अमुत्र=परलोक=Next/other world
जातु=कदाचित्=Perhaps
किमुत=विकल्प=Option
किञ्च=इसके अतिरिक्त=Extra
स्थाने=उचित=Right
उररी/उरी=स्वीकृति=Acceptancc
परारि=दो वर्ष पहले=Before two years

***संकल्पः-***

मातृभूमिः भारतम्-मातृभाषा संस्कृतम्।
समाजस्य हितं-संस्कृते निहितम्।
संस्कृतस्य अवमाननम्, मम अवमाननम्।
विना संस्कृतं न संस्कृतिः।
'गुड्मर्निङ्' न हि 'सुप्रभातम्' थेंवस न हि 'धन्यवादः'।

*एतेषां क्रियापदानां (धातूनां) शनैः शनैः अभ्यासः कर्तव्यः-*

| | | | | |
|---|---|---|---|---|
| अस्-होना | = | To be | = | अस्ति |
| पठ्-पढ़ना | = | To read | = | पठति |
| वद्-बोलना | = | To speak | = | वदति |
| गम्-जाना | = | To go | = | गच्छति |
| स्था-रुकना | = | To stay | = | तिष्ठति |
| पा-पीना | = | To drink | = | पिबति |
| दृश्-देखना | = | To see | = | पश्यति |
| नी-ले जाना | = | To carry | = | नयति |
| भू-होना | = | To be | = | भवति |
| कथ्-कहना | = | To tell | = | कथयति |
| लिख्-लिखना | = | To write | = | लिखति |
| इष्-चाहना | = | To wish | = | इच्छति |
| प्रच्छ्-पूछना | = | To ask | = | पृच्छति |
| नृत्-नाचना | = | To dance | = | नृत्यति |
| कृ-करना | = | To do | = | करोति |
| श्रु-सुनना | = | To heard | = | शृणोति |
| शक्-सकना | = | To be able | = | शक्नोति |

किं वारं वारं चिन्तनीयम्?

**कः कालः कानि मित्राणि को देशः कौ व्ययागमौ।**
**कश्चाहं का च मे शक्तिः इति चिन्त्यं मुहुर्मुहुः।।**

***

# षड्विंशः पाठः

***क्त्वाप्रत्ययः -***

(पूर्वकालिकक्रियार्थे क्त्वा (त्वा) प्रत्ययो भवति)

| *सामान्यरूपम्-* | *प्रेरणार्थकरूपम्* |
|---|---|
| पठित्वा=पढ़कर=After study. | पाठयित्वा=पढ़ाकर= |
| कृत्वा=कर या करके=After doing | कारयित्वा=कराकर= |
| गत्वा=जाकर=After going. | गमयित्वा=भेजकर= |
| लिखित्वा=लिखकर=After writing | लेखयित्वा=लिखवाकर= |
| भूत्वा=होकर=After being | भावयित्वा=होवाकर= |
| वदित्वा=बोलकर=After speaking | वादयित्वा=बुलवाकर= |
| स्थित्वा=ठहरकर=After stoping/Staying | स्थापयित्वा=रखवाकर= |
| पीत्वा=पीकर=After drinking | पाययित्वा=पिलाकर= |
| दृष्ट्वा=देखकर=After seeing | दर्शयित्वा=दिखाकर= |
| नीत्वा=ले जाकर=After taking | नाययित्वा=लिवाकर= |
| पृष्ट्वा=पूछकर=After Asking | प्रच्छयित्वा=पूछवाकर= |
| कथयित्वा=कहकर=After Telling | कथयित्वा=कहवाकर= |
| ज्ञात्वा=जानकर=After Knowing | ज्ञापयित्वा=जनवाकर= |
| दत्वा=देकर=After Giving | दापयित्वा=दिलाकर= |
| गृहीत्वा=लेकर=After Taking | ग्राहयित्वा=ग्रहण कराकर= |
| नत्वा=नमस्कारकर=After saluting | नमयित्वा=नमस्कार कराकर= |
| श्रुत्वा=सुनकर=After Hearing | श्रावयित्वा=सुनवाकर= |
| हसित्वा=हँसकर=After Laughing | हासयित्वा=हँसाकर= |
| शयित्वा=सोकर=After Sleeping | शाययित्वा=सुलाकर= |

**दा (देना To give) लट्लकारस्य रूपाणि-**

ददाति दत्तः ददति, ददासि दत्थः दत्थ, ददामि दद्वः दद्मः।

**जागृ (जागना To awake) लट्लकारस्य रूपाणि-**

जागर्ति जागृतः जाग्रति, जागर्षि जागृथः जागृथ, जागर्मि जागृवः जागृमः।

अद् (खाना To eat) लट्लकारस्य रूपाणि-

अत्ति अत्तः अदन्ति, अत्सि अत्थः अत्थ, अद्मि अद्वः अद्मः।

***वाक्येषु प्रयोगः-***

रामः पाठं पठित्वा, स्नानं कृत्वा, पत्रं लिखित्वा, पुस्तकानि च गृहीत्वा विद्यालयं गच्छति।

अहं जलं पीत्वा, चित्रं दृष्ट्वा, गुरुं नत्वा, कथां श्रुत्वा, पाठं पृष्ट्वा आपणं गच्छामि।

गुरुः पाठं पाठयित्वा, गृहकार्यं कारयित्वा, कथां श्रावयित्वा छात्रान् हासयित्वा विद्यालयात् गृहम् अगच्छत्।

***क्तप्रत्ययः-(स्मरणार्थम्)***

भूतकालार्थे धातुभ्यः क्तप्रत्ययो भवति। अस्मात् प्रत्ययात् निष्पन्न-शब्दानां त्रिषु एव लिङ्गेषु रूपाणि चलन्ति-

| सामान्ये | प्रेरणार्थके |
|---|---|
| (पु.) पठितः पठितौ पठिताः | पाठितः पाठितौ पाठिताः |
| (स्त्री.) पठिता पठिते पठिताः | पाठिता पाठिते पाठिताः |
| (नपु.) पठितम् पठिते पठितानि | पाठितम् पाठिते पाठितानि |
| (पुं.) गतः गतौ गताः | गमितः गमितौ गमिताः |
| (स्त्री.) गता गते गताः | गमिता गमिते गमिताः |
| (नपुं.) गतम् गते गतानि | गमितम् गमिते गमितानि |

| | सामान्ये | प्रेरणार्थके |
|---|---|---|
| (पुं.) | लिखितः लिखितौ लिखिताः | लेखितः लेखितौ लेखिताः |
| (स्त्री.) | लिखिता लिखिते लिखिताः | लेखिता लेखिते लेखिताः |
| (नपुं) | लिखितम् लिखिते लिखितानि | लेखितम् लेखिते लेखितानि |

***धातुरूपाणि-***

| | |
|---|---|
| गद् (स्पष्ट बोलना) | अर्च् (पूजा करना) |
| (To speak clear) | (To worship) |
| गदति गदतः गदन्ति | अर्चति अर्चतः अर्चन्ति |
| गदसि गदथः गदथ | अर्चसि अर्चथः अर्चथ |
| गदामि गदावः गदामः | अर्चामि अर्चावः अर्चामः |

***वाक्येषु प्रयोगः-***

(पुं.) तेन ग्रन्थः पठितः।
तेन ग्रन्थौ पठितौ।
तेन ग्रन्थाः पठिताः।

(स्त्री.) त्वया गीता पठिता।
त्वया गीते पठिते।
त्वया गीताः पठिताः।

(नपुं.) मया पत्रं पठितम्।
मया पत्रे पठिते।
मया पत्राणि पठितानि।

***एवमेव-***

रामेण ग्रामः गतः। त्वया लक्ष्मणपुरं गतम्। मया वाराणसी गता। तेन पत्रं लिखितम्। त्वया कथा लिखिता। मया गीतं लिखितम्। व्यासेन पुराणानि लिखितानि। श्रीमता वाल्मीकिना रामायणं लिखितम्। श्रीमता कालिदासेन रघुवंशः लिखितः।

***एतेषां क्रिया पदानां (धातूनां) शनैः शनैः अभ्यासः कार्यः-***

| | | | | |
|---|---|---|---|---|
| प्र+आप्=पाना | = | To obtain | = | प्राप्नोति |
| ज्ञा=जानना | = | To know | = | जानाति |
| ग्रह्=ग्रहण करना | = | To take | = | गृह्णाति |

| | | | | |
|---|---|---|---|---|
| क्री=खरीदना | = | To buy | = | क्रीणाति |
| दा=देना | = | To give | = | ददाति |
| सेव्=सेवा करना | = | To serve | = | सेवते |
| लभ्=पाना | = | To get | = | लभते |
| मन्=सोचना | = | To think | = | मन्यते |

***संकल्पः-(उच्चैः वक्तव्यम्)***

पठत-पठत-संस्कृतभाषाम्
लिखत-लिखत-संस्कृतभाषाम्।
रटत-रटत-संस्कृतभाषाम्
वदत-वदत-संस्कृतभाषाम्।
पूर्वजानां भाषा-संस्कृतभाषा
देवानां भाषा-संस्कृतभाषा
वेदानां भाषा-संस्कृतभाषा

युष्माकं भाषा-संस्कृतभाषा
अस्माकं भाषा-संस्कृतभाषा
तेषां भाषा-संस्कृतभाषा
सर्वजातीनां भाषा-संस्कृतभाषा
सर्वधर्माणां भाषा-संस्कृतभाषा
नारीणां भाषा-संस्कृतभाषा
सर्वेषां भाषा-संस्कृतभाषा

***

# सप्तविंशः पाठः

*शतृप्रत्ययः-*

वर्तमाने अर्थे धातुभ्यः शतृ (अत्) प्रत्ययो जायते। शतृप्रत्ययान्तस्य रूपाणि त्रिषु एव लिङ्गेषु चलन्ति-

पठ्+शतृ=पठत् (पढ़ता हुआ) (Like countinuous tense)

(पुं.) पठन् पठन्तौ पठन्तः (स्त्री.) पठन्ती पठन्त्यौ पठन्त्यः

गच्छन् गच्छन्तौ गच्छन्तः गच्छन्ती गच्छन्त्यौ गच्छन्त्यः

लिखन् लिखन्तौ लिखन्तः लिखन्ती लिखन्त्यौ लिखन्त्यः

*धातुरूपाणि-*

| **द्युत् (चमकना) लट्लकार** | **शुभ् (शोभित होना)** |
|---|---|
| द्योतते द्योतेते द्योतन्ते | शोभते शोभेते शोभन्ते |
| द्योतसे द्योतेथे द्योतध्वे | शोभसे शोभेथे शोभध्वे |
| द्योते द्योतावहे द्योतामहे | शोभे शोभावहे शोभामहे |

| **क्षुभ् (घबड़ाना)** | **तुभ् (मारना)** |
|---|---|
| क्षोभते क्षोभेते क्षोभन्ते | तोभते तोभेते तोभन्ते |
| क्षोभसे क्षोभेथे क्षोभध्वे | तोभसे तोभेथे तोभध्वे |
| क्षोभे क्षोभावहे क्षोभामहे | तोभे तोभावहे तोभामहे |

*वाक्येषु प्रयोगः-*

(पुं.) सः पठन् अस्ति, तौ पठन्तौ स्तः, ते पठन्तः सन्ति।
त्वं पठन् असि, युवां पठन्तौ स्थः यूयं पठन्तः स्थ।
अहं पठन् अस्मि, आवां पठन्तौ स्वः, वयं पठन्तः स्मः।

(स्त्री.) सीता पठन्ती अस्ति, सीते पठन्त्यौ स्तः, सीताः पठन्त्यः सन्ति।
बालिका पठन्ती अस्ति, बालिके पठन्त्यौ स्तः, बालिकाः पठन्त्यः सन्ति।
छात्रा लिखन्ती अस्ति, छात्रे लिखन्त्यौ स्तः, छात्राः लिखन्त्यः सन्ति।

**सावधानाः पठन्तु-**

राम: संस्कृतं पठति। अहं रामं पश्यामि। रामेण सह गच्छ। रामाय फलं देहि। रामात् सुन्दरः कोऽपि नास्ति। इदं रामस्य पुस्तकम् अस्ति। अहं रामे विश्वसिमि (विश्वासं करोमि इति भाव:)। हे राम ! किमर्थं त्वं स्वपाठं सम्यक् न पठसि?

**ल्यप्प्रत्ययः-**

यदा धातुभ्य: पूर्वम् उपसर्ग: भवति तदा क्त्वा (त्वा) स्थाने ल्यप् भवति।

**उदाहरणम्-**

| धातुः प्रत्ययः | उपसर्गः | ल्यप् (य) |
|---|---|---|
| दा+क्त्वा=दत्वा | आ | आदाय |
| गम्+क्त्वा=गत्वा | आ | आगत्य |
| श्रु+क्त्वा=श्रुत्वा | सम् | संश्रुत्य |
| पठ्+क्त्वा=पठित्वा | सम् | संपठ्य |
| गम्+क्त्वा=गत्वा | अनु | अनुगम्य |
| नी+क्त्वा=नीत्वा | आ | आनीय |
| स्था+क्त्वा=स्थित्वा | प्र | प्रस्थाय |
| पा+क्त्वा=पीत्वा | नि | निपीय |
| दृश्+क्त्वा=दृष्ट्वा | सम् | सन्दृश्य |
| मन्+क्त्वा=मत्वा | अनु | अनुमत्य |

**वाक्येषु प्रयोगः-**

छात्र: पुस्तकानि आदाय विद्यालयं गच्छति।
गुरु: विद्यालयम् आगत्य छात्रान् पाठयति।
विद्यार्थी गीतं संश्रुत्य पाठं सम्पठ्य विद्यालयात् आगच्छति।
कूपात् जलम् आनीय पिब।

**सेव्धातोः पञ्चलकारेषु रूपाणि कण्ठस्थं कुरुत-**

लट्- सेवते सेवेते सेवन्ते
सेवसे सेवेथे सेवध्वे
सेवे सेवावहे सेवामहे

लृट्- सेविष्यते सेविष्येते सेविष्यन्ते
सेविष्यसे सेविष्येथे सेविष्यध्वे
सेविष्ये सेविष्यावहे सेविष्यामहे

लङ्- असेवत असेवेताम् असेवन्त
असेवथा: असेवेथाम् असेवध्वम्
असेवे असेवावहि असेवामहि

लोट्-सेवतां सेवेतां सेवन्ताम्
सेवस्व सेवेथां सेवध्वम्
सेवै सेवावहै सेवामहै

| | | | |
|---|---|---|---|
| लिङ्- | सेवेत | सेवेयाताम् | सेवेरन् |
| | सेवेथाः | सेवेयाथाम् | सेवेध्वम् |
| | सेवेय | सेवेवहि | सेवेमहि |

***प्रयोगः-***

सः गुरुं सेवते, तौ गुरुं सेवेते, ते गुरुं सेवन्ते
त्वं गुरुं सेवसे, युवां गुरुं सेवेथे, यूयं गुरुं सेवध्वे
अहं गुरुं सेवे, आवां गुरुं सेवावहे, वयं गुरुं सेवामहे

***संकल्पः-***

यत्र यत्र गच्छसि-पश्य तत्र संस्कृतम्।
संस्कृतेन सम्भाषणं कुरु, जीवनस्य परिवर्तनं कुरु।
संस्कृतस्य सेवया पवित्रमस्तु जीवनम्।
उपरि पश्य-संस्कृतभाषाम्
नीचैः पश्य-संस्कृतभाषाम्
अत्र पश्य-संस्कृतभाषाम्
तत्र पश्य-संस्कृतभाषाम्

***शब्दरूपाणि स्मरत-तत्-(वह)-***

**पुल्लिङ्गे**-सः तौ ते, तं तौ तान्, तेन ताभ्यां तैः, तस्मै ताभ्यां तेभ्यः, तस्मात् ताभ्यां तेभ्यः, तस्य तयोः तेषां, तस्मिन् तयोः तेषु।

***स्त्रीलिङ्गे***-सा ते ताः, तां ते ताः, तया ताभ्यां ताभिः, तस्यै ताभ्यां ताभ्यः, तस्याः ताभ्यां ताभ्यः, तस्याः तयोः तासाम् तस्यां तयोः तासु।

***नपुंसके***-तद् ते तानि, तद् ते तानि (शेषं पुंवत्)

अनयैव रीत्या-एतद्, इदम्, युष्मद्, अस्मद्, अदस् शब्दानां रूपाणि रूपावलि-सहयोगेन कण्ठस्थीकर्तव्यानि।

***

# अष्टाविंशः पाठः

*छात्रेभ्यः निर्देशवाक्यानि-*

अत्र आगम्यताम्=यहाँ आइये= Come here.
तत्र गम्यताम्=वहाँ जाइये= Go there.
दूरम् अपसृयताम्=दूर हटिये= Go away.
सम्यक् स्थीयताम्=ठीक से खड़े होइये= Stand properly.
सम्यक् उपविश्यताम्=ठीक से बैठिये= Sit properly.
पाठः पठ्यताम्=पाठ पढ़िये= Learn the lesson.
लेखः लिख्यताम्=लेख लिखिये= Write on article.
सम्यक् पठ्यताम्=ठीक से पढ़िये= Read properly.
सुन्दरं लिख्यताम्=अच्छा लिखिये= Write properly.
अनुकरणं न क्रियताम्=नकल मत करो= Do not copy.
तूष्णीं स्थीयताम्=चुप बैठिये= Silent.
लेखपुस्तिका आनीयताम्=कापी ले आइये=Bring an exercise book.
पाठः श्राव्यताम्=पाठ सुनाइये=
Pronounce lesson.
एकं मनोहरं गीतं श्राव्यताम्=एक मनोहर गीत सुनाइये=
Sing an interesting song.
एकः श्लोकः श्राव्यताम्=एक श्लोक सुनाइये=Read a stanza.
श्रूयताम्/आकर्ण्यताम्=सुनिये= Listen.
शीघ्रम् आगम्यताम्=जल्दी आइये= Come soon.
उत्थीयताम्=खड़े होइये= Stand up.
विरम्यताम्=रुकिये= Stop.
कपाटम् उद्घाट्यताम्=दरवाजा खोलिये= Open the door.
प्रकोष्ठः सम्मार्ज्यताम्=कमरा साफ कीजिये=Clean the room.
स्वकार्यं स्वयमेव क्रियताम्=अपना काम स्वयं कीजिये=
Do yourself own work.

*प्रश्नवाक्यानि-*

भवत: नाम किम्?=आपका क्या नाम है? What is your name?
किं कार्यम् अस्ति?=क्या काम है? What is the work?
किम् इच्छति?=क्या चाहते हैं? What do you want?
कापि वार्ता अस्ति?=क्या बात है? There is any news?
सर्वं शोभनं वर्तते?=सब कुछ ठीक ठाक है? Everything is well?
पुनः दर्शनं दीयताम्=फिर दर्शन दीजिए। See you again.

***द्वयोः छात्रयोः वार्तालापः-***

प्रथमः- नमो नमः। कुत आगच्छति भवान्?
द्वितीयः- नमामि, नमामि। विद्यालयतः आगच्छामि।

प्र०- अद्य तु अवकाशः अस्ति, भवान् किमर्थं तत्र गतवान्?

द्वि०- सत्यम्, परन्तु मम विद्यालये सम्प्रति संस्कृतसंभाषणशिविरं प्रचलत् अस्ति। शिविरे भागं गृहीत्वा आगच्छामि।

प्र०- संस्कृतसंभाषणेन कः लाभः? व्यवहारस्तु कयापि भाषया चालयितुं शक्यते। किम् असंस्कृतज्ञानां व्यवहारः न प्रचलति?

द्वि०- सत्यम्, न केवलं भवान् अपितु श्रेष्ठाः उच्चपदे स्थिताः संस्कृतपण्डिता अपि एवंविधं प्रश्नं कुर्वन्ति। अतः सावधानो भूत्वा शृणोतु एतस्य उत्तरम्।

- संस्कृतभाषा अन्या भाषा इव सामान्या भाषा नास्ति। इयं तु सर्वासाम् भारतीयभाषाणां जननी अस्ति। अथ च भारतस्य सर्वमपि ज्ञानं संस्कृतभाषायामेव सुरक्षितम् अस्ति।

अतः संस्कृतभाषाया ज्ञानं विना कस्यापि भारतीयस्य ज्ञानं वस्तुतः परिपूर्णं न जायते। अत एव संस्कृतभाषायां सम्भाषणं नाम न केवलं व्यवहारचालनम् अपितु **प्राचीनतमभारतीयसंस्कृत्या सह स्व-सम्पर्कसाधनम् अपि अस्ति।**

प्र०- सम्यक् अवगतम्। क्षम्यतां निरर्थकप्रश्नस्य कृते, अयं जनः।

***

# नवविंशः पाठः

*वाच्यपरिवर्तनाभ्यासः -*

| कर्तृवाच्यम् | कर्मवाच्यम् |
|---|---|
| १) अहं पुस्तकं पठामि। | मया पुस्तकं पठ्यते। |
| २) त्वं पुस्तकं पठसि। | त्वया पुस्तकं पठ्यते। |
| ३) भवान् पुस्तकं पठति। | भवता पुस्तकं पठ्यते। |
| ४) सा पुस्तकं पठति। | तया पुस्तकं पठ्यते। |
| ५) अयं बालकः पठति। | अनेन बालकेन पठ्यते। |
| ६) इयं बालिका पठति। | अनया बालिकया पठ्यते। |
| ७) भवती पुराणं पठति। | भवत्या पुराणं पठ्यते। |
| ८) आवां पठावः। | आवाभ्यां पठ्यते। |
| ९) युवां पठथः। | युवाभ्यां पठ्यते। |
| १०) इमे बालकाः पुस्तकं पठन्ति। | एभिः बालकैः पुस्तकं पठ्यते। |
| ११) इमाः बालिकाः पुस्तकं पठन्ति। | आभिः बालिकाभिः पुस्तकं पठ्यते। |
| १२) भवन्तः पुस्तकं पठन्ति। | भवद्भिः पुस्तकं पठ्यते। |
| १३) अहं श्लोकं पठामि। | मया श्लोकः पठ्यते। |
| १४) रामः कथां पठति। | रामेण कथा पठ्यते। |
| १५) केशवः ग्रन्थं पठति। | केशवेन ग्रन्थः पठ्यते। |
| १६) अहं श्लोकौ पठामि। | मया श्लोकौ पठ्येते। |
| १७) अहं श्लोकान् पठामि। | मया श्लोकाः पठ्यन्ते। |
| १८) अहं पुस्तके पठामि। | मया पुस्तके पठ्येते। |
| १९) अहं पुस्तकानि पठामि। | मया पुस्तकानि पठ्यन्ते। |
| २०) सः कथां कथयति। | तेन कथा कथ्यते। |
| २१) सः कथे कथयति। | तेन कथे कथ्येते। |
| २२) सः कथाः कथयति। | तेन कथाः कथ्यन्ते। |
| २३) रामः विद्यालयं गच्छति। | रामेण विद्यालयः गम्यते। |
| २४) कृष्णः वाराणसी गच्छति। | कृष्णेन वाराणसी गम्यते। |

| | |
|---|---|
| २५) गोपालः अध्ययनं करोति। | गोपालेन अध्ययनं क्रियते। |
| २६) हरिः पत्रं प्रेषयति। | हरिणा पत्रं प्रेष्यते। |
| २७) छात्रः संस्कृतं पठति। | छात्रेण संस्कृतं पठ्यते। |
| २८) अध्यापकः छात्रं पाठयति। | अध्यापकेन छात्रः पाठ्यते। |

***सेव्धातुवत् निम्नोक्तधातूनां रूपाणि चालयत-***

| धातवः | | उदाहरणम् |
|---|---|---|
| कम्प्=काँपना=Shake | कम्पते | वृक्षः कम्पते। |
| काश्=चमकना=Shine | काशते | आकाशे चन्द्रः काशते। |
| कास्=खाँसना=To cough | कासते | वृद्धः कासते। |
| क्षम्=क्षमा करना=Pardon | क्षमते | नृपः सेवकं क्षमते। |
| गर्ह्=निन्दा करना=Backbiting | गर्हते | दुर्जनः सज्जनं गर्हते। |
| गाह्=डुबकी लगाना=Dip | गाहते | मुनिः नद्यां गाहते। |
| ग्रस्=खाना=Eat | ग्रसते | सर्पः भेकं ग्रसते। |
| घट्=घटित होना=To be | घटते | वार्ता घटते। |
| त्रप्=लज्जा करना=Shame | त्रपते | वधूः त्रपते। |
| दय्=दया करना=To be kind | दयते | स्वामी दयते। |
| ध्वंस्=नष्ट करना=To distroy | ध्वंसते | गृहं ध्वंसते। |
| पर्द्=हवा छोड़ना=To relise gas | पर्दते | मनुष्यः पर्दते। |
| प्रथ्=फैलना=Expand | प्रथते | गुणवतां कीर्तिः प्रथते। |
| भाष्=कहना=Tell | भाषते | रामः सर्वदा सत्यं भाषते। |
| भास्=चमकना=Shine | भासते | आकाशे रविः भासते। |
| भिक्ष्=माँगना=Beg | भिक्षते | भिक्षुकः अहर्निशं भिक्षते। |
| भ्रंश्=गिरना=Fall | भ्रंशते | पाषाणखण्डः पर्वतात् भ्रंशते। |

***इदमप्यनुसन्धेयम्-***

कः पठति? छात्रः पठति, किं पठति? संस्कृतभाषाम्।
का लिखति? छात्रा लिखति, केन लिखति? कलमेन।
कः धावति? अश्वः धावति, कुत्र धावति? मार्गे।
कः नृत्यति? मयूरः नृत्यति, कुत्र नृत्यति? वने।
किं पतति? पुष्पं पतति, कस्मात् पतति? वृक्षात्।
कः तरति? नाविकः तरति, कुत्र तरति? जले।
का पचति? माता पचति, किं पचति? भोजनम्।

कः पाठयति? गुरुः पाठयति, किं पाठयति? पुस्तकम्।

कः नमति? छात्रः नमति, कं नमति? गुरुम्।

***संकल्पः-***

संस्कृतस्य सेवया पवित्रमस्तु जीवनम्।
संस्कृताय अर्पितं पवित्रमस्तु मे धनम्।
संस्कृतस्य पाठनं संस्कृतस्य गायनम्।
संस्कृतेन नर्तनं कुरुष्व मित्र ! सर्वदा।।

१) संस्कृतज्ञानं विना भारतीयानां ज्ञानम् अपूर्णम्।
२) संस्कृतं विना भारतीयासंस्कृतिः जीवनरहिता।
३) संस्कृतं विना भारतीयेतिहासः अपूर्णः।
४) संस्कृतं विना भारतीयसभ्यता निष्प्राणा।
५) संस्कृतं विना भारतं न भारतम्।

***स्मरणीय-श्लोकाः***

त्यज दुर्जनसंसर्गं भज साधु समागमम्।
कुरु पुण्यमहोरात्रं स्मर नित्यमनित्यताम्।।

धर्मं चरत माधर्मं सत्यं वदत मानृतम्।
दीर्घं पश्यत मा ह्रस्वं परं पश्यत मापरम्।।

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्।।

धृतिः क्षमा दमोऽस्त्येयं शौचमिन्द्रियनिग्रहः।
धीः विद्या सत्यमक्रोधः दशकं धर्मलक्षणम्।।

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्।।

श्रूयतां सर्वधर्मस्वं श्रुत्वा चैवावधार्यताम्।
आत्मनः प्रतिकूलानि परेषां न समाचरेत्।।

गुह्यं ब्रह्म तदिदं वो ब्रवीमि।
न मानुषात् श्रेष्ठतरं हि किञ्चित्।।

***

# त्रिंशः पाठः

## *संस्कृतस्य ज्ञानं विना ज्ञानम् अपूर्णम्*

***संस्कृतशब्दः -***

सम् उपसर्गपूर्वकात् कृधातोः क्तप्रत्यये कृते संस्कृतशब्दः निष्पद्यते। विग्रहश्च अस्य सम्यक् कृतं संस्कृतम् इति भवति। अतः यत् किमपि सम्यक्रूपेण कृतं भवति तत् संस्कृतम् अस्ति। भोजनम्, वस्त्रम्, गृहम्, व्यवहारः, आचरणम्, वाणी, भाषा, जनः परिवारः, समाजः, राष्ट्रम्, विश्वम्, इत्यादिषु सर्वेषु पदार्थेषु विषयेषु च संस्कृतम् प्रयोक्तुं शक्यते। अत्र भाषादृष्ट्या संस्कृतस्य प्रयोगः विधीयते।

***प्राचीनत्वं श्रेष्ठत्वञ्च-***

संसारे बहव्यः भाषाः वर्तन्ते, तासु संस्कृतमपि एका भाषा। इयं भाषा सर्वप्राचीना अस्ति, यतो हि बुद्धाविर्भावादपि पूर्वं संस्कृतभाषा उन्नतिशिखरं गता आसीत्। संस्कृतभाषायां निबद्धः ऋग्वेदग्रन्थः विश्वस्य प्राचीनतमः ग्रन्थः वर्तते । संस्कृतभाषा न केवलं प्राचीनतमा एव अपितु सर्वगुणगणालङ्कृतापि अस्ति। संसारे वर्तमानाः अन्याः भाषाः देश-कालभेदेन पृथक्-पृथक् उच्चार्यन्ते परं संस्कृतभाषायाः उच्चारणं लेखनं भाषणं च सर्वत्र समानानि भवन्ति। आङ्गलभाषायां लेखने पठने च महान् विभेदः दृश्यते। (Put) पुट् उच्चार्यते तथा च (But) बट। एवमेव **साइलेन्ट** वर्णानां समस्या पृथक् अस्ति। अत एव स्पष्टतया वक्तुं शक्यते यत् लेखन-भाषण-उच्चारणदृष्ट्यापि संस्कृतभाषा सर्वश्रेष्ठा अस्ति। इदानीम् अनुसन्धातारः वैज्ञानिका अपि प्रतिपादयन्ति यत् संस्कृतभाषा स्वोच्चारणसाम्यवैशिष्ट्यात् संगणकस्य (कम्प्युटर) कृते अतीवोपयोगिनी भविष्यति इति। एतत् सम्बन्धे भारते विदेशेष्वपि च अनुसन्धानं जायमानमस्ति।

***सर्वभारतीयभाषाणां जननी-***

भारतवर्षेऽस्मिन् तमिल-बङ्गाली-मराठी-गुजराती-ओडिसी-पञ्जाबी-हिन्दी-गोरखाली-आसामी-पालि-प्रभृतयः भाषाः सन्ति। एतासां भाषाणां व्यवहारकर्तारः कश्मीरात्-कन्याकुमारी पर्यन्तं वर्तमानाः, हिमालयं परितः प्रसृताः जनाश्च कोटि-कोटि संख्याकाः वर्तन्ते। एताः सर्वा एव भाषाः संस्कृतभाषायाः पुत्र्यः पौत्र्यश्च सन्ति। नास्त्यत्र सन्देहस्यावसरः। सर्वासु भाषासु संस्कृतस्य शब्दाः बाहुल्येन लभ्यन्ते। एतासां व्याकरणसम्बन्धिनियमा अपि प्रायः संस्कृत- व्याकरणानुकूला एव भवन्ति। कवितासु संस्कृतच्छन्दसां प्रयोगाः अपि यत्र तत्र दरीदृश्यन्ते। एतासु भाषासु वर्तमानाः प्रायःसर्वेऽपि शब्दाः तत्सम तद्भवरूपेण संस्कृतभाषायाः एव समागताः सन्ति। अतः संस्कृतस्य ज्ञानं विना कस्यापि भारतीयभाषायाः पूर्णं ज्ञानं केनापि कर्तुं न शक्यते।

***सर्वधर्मसंप्रदायानां पोषिणी-***

भारतवर्षे वैदिक-बौद्ध-जैनप्रभृतयो ये संप्रदायाः विद्यन्ते, तेषां मूलमपि संस्कृतमेव वर्तते। वैदिकानाम्-वेदेतिहास-पुराण-स्मृति-महाभारत-रामायणार्थशास्त्र-ज्योतिष-व्याकरणप्रभृतयो ग्रन्थाः संस्कृतभाषायामेव सन्ति। एवमेव **बौद्धानां** जातककथाः वैभाषिक-सौत्रान्तिक-विज्ञानवाद-शून्यवाद- सम्प्रदायानाम् प्रामाणिकाः आकरग्रन्थाः संस्कृतभाषायामेव सन्ति। बौद्ध- विद्वांसः अश्वघोष-नागार्जुन-धर्मकीर्ति-चन्द्रकीर्ति-स्थिरमति-शान्तिदेव-दिङ्नाग-असङ्ग-बसुबन्धु-कमलशील-प्रभृतयः संस्कृतभाषायामेव महत्वपूर्णकाव्यानां दार्शनिकग्रन्थानाञ्च प्रणयनं कृतवन्तः। संप्रति भोटभाषायां येऽपि दार्शनिकग्रन्थाः वर्तन्ते ते संस्कृतग्रन्थेभ्यः एव अनुदिताः सन्ति। यथा वैदिक-बौद्धयोराकरग्रन्थाः संस्कृते वर्तन्ते तथैव **जैनानामपि ग्रन्थाः** मूलरूपेण टीकारूपेण वा संस्कृतभाषायामेवोपनिबद्धाः। यद्यपि बौद्धानां मूलभाषा पालिः, जैनानाञ्च प्राकृतमस्ति, परन्तु संस्कृतभाषायाः महत्वं वैशिष्ट्यञ्चावगत्य तत्तत्सम्प्रदायाचार्यैः संस्कृतमेवाश्रितम्।

***जैनानां प्रमुखग्रन्थाः-***

गोम्मटसमरजीवकाण्ड-गोम्मटसमरकर्मकाण्ड-स्वामिकार्तिकेया-नुप्रेक्षा-परमात्मप्रकाश-प्रवचनसार-स्याद्वादमञ्जरी-बृहद्द्रव्य-संग्रहप्रभृतयो नैके ग्रन्थाः संस्कृतभाषायामेवोपनिबद्धाः सन्ति। भारतवर्षीयाः प्राचीनाः प्रमुखसम्प्रदायाः एते एव सन्ति। एतैः त्रिभिरेव संस्कृतं पूर्णरूपेणाश्रितमस्ति। तदनन्तरम् एतेभ्यः त्रिभ्यः प्रसूताः उपसम्प्रदायाः अपि ये ये सन्ति तेषां सर्वेषामपि मूलं संस्कृतमेव। अतः संस्कृतज्ञानं विना वैदिक-बौद्ध-जैनानां वास्तविकं रहस्यं नैव ज्ञातुं शक्यते।

***कर्मकाण्डभाषा-***

भारतवर्षे सञ्चाल्यमानानां कर्मकाण्डानां भाषा संस्कृतमेवास्ति। उत्तरे दक्षिणे चैक एव संकल्पः प्रोच्चार्यते। मठमन्दिराणां पुरोहितानाञ्च भाषा संस्कृतमेवास्ति। सर्वेऽपि भारतीयाः स्नानकाले श्लोकमिमं पठन्ति-

**गङ्गे च यमुने चैव गोदावरि सरस्वति !**
**नर्मदे सिन्धु काबेरि जलेऽस्मिन् सन्निधिं कुरु ।।**

सर्वत्रैव जन्मप्रभृति मरणं यावत् समायोज्यमानकर्मकाण्डेषु संस्कृतभाषायाः एव प्रयोगो दृश्यते। एवमेव रामलीला-कृष्णलीला-प्रभृतिषु लीलास्वपि संस्कृतस्य महान् प्रभावः दृश्यते। अत एवोक्तं चिन्तकेन विदुषा-

भारतीयैकतासाधकं संस्कृतम्
भारतीयत्वसंपादकं संस्कृतम्।
ज्ञानपुञ्जप्रभादर्शकं संस्कृतम्
सर्वदानन्दसन्दोहदं संस्कृतम्।। (पं०वासुदेवद्विवेदी शास्त्री)

***सरलतमभाषा-***

इदानीं यावत् संस्कृतं कठिनम् इति सर्वत्र प्रचार्यते। परं संस्कृत-भाषेयम् अस्ति सरलतमा। संस्कृतज्ञानशून्योऽपि जनः केवलं दशदिवसेषु (प्रतिदिनं घण्टाद्वयमेव) सामान्यसंस्कृतसंभाषणं कर्तुं शक्नोति। सम्प्रति एतस्य प्रयोगाः साफल्येन भारतवर्षे विदेशेष्वपि प्रचलन्ति। एतत् न कल्पनामात्रम् अपितु प्रत्यक्षसिद्धम् अस्ति। संस्कृतं विहाय अन्या कापि भाषा केवलं दशदिवसेषु ज्ञातुं न शक्यते। अतः संस्कृतं कठिनम् इति

कथनं सर्वथा असत्यम् अस्ति। संस्कृतं कठिनमिति विषये एकस्य पण्डितस्य इदं कथनं मननीयम्-

**संस्कृत को कुछ कठिन समझ कर जो पढ़ने से डरते हैं।**
**वे आगे और कौन सा कठिन काम कर सकते हैं?**
**फिर संस्कृत तो बहुत सरल है इसे कठिन बतलाना।**
**अपनी नासमझी है भारी या यह एक बहाना।।**

***संस्कृतं सर्वेषां भाषा-***

संस्कृतभाषा कस्यापि एकस्य देशस्य, धर्मस्य, सम्प्रदायस्य, वर्गस्य, एकस्याः जातेः वा भाषा नास्ति। अपितु इयं भाषा सर्वेषां मानवानां, सर्वेषां देशानां, सर्वासां जातीनाञ्च भाषा अस्ति। अतः संस्कृतं केवलं ब्राह्मणानां, हिन्दूनां, धार्मिकाणां, कर्मकाण्डानां भाषा अस्तीति मतं सर्वथा निर्मूलं स्वार्थसंवलितञ्च मन्तव्यम्। सर्वे मानवाः समानरूपेण संस्कृतम् पठितुं शक्नुवन्ति, **इत्यत्र नास्ति मनागपि शङ्कालेशः।**

***संस्कृते सर्वमस्ति-***

यत् यन्मानवानां कृते आवश्यकमस्ति तत् सर्वमपि संस्कृतवाङ्मये राजते। यथा-राजशास्त्रम्, अर्थशास्त्रम्, कामशास्त्रम्, नीतिशास्त्रम्, शिल्पशास्त्रम्, वास्तुशास्त्रम्, आयुर्वेदशास्त्रम्, नाट्यशास्त्रम्, इत्यादीनि सर्वाणि मानवोपयोगीनि शास्त्राणि विलसन्ति। अतएव महाभारतकारः सगर्वं वदति-**यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्।** एतस्मादेव सर्वैः मानवैः अवश्यमेव संस्कृतं पठनीयं, पाठनीयं, प्रचारणीयञ्च इति सादरं निवेद्य विरम्यते।

अन्ते चेदमेव काम्यते-

**सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत्।**

ॐ सह नाववतु सहनौ भुनक्तु सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु, मा विद्विषावहै।।

**ॐ शान्तिः ! शान्तिः !! शान्तिः !!!**

***